भ्रूविक्षेपकटाक्षवीक्षणलसत्संसिक्तकर्णोत्पलं ॥ स्निग्धं बिंबफलाधरं प्रहसितं निलालकालंकृतं वंदे पूर्णशशांकमंडलनिभंवक्त्ररहस्योत्तरं ॥ कृष्णवर्णाय गरुडवाहनाय उत्तरवक्त्राय आपस्तत्वाय अमृतरूपात्मने विष्णवे नमः ॐ ह्रींपद्मंमुद्राप्रदर्शनं उत्तरवक्त्रंपूजयेत् श्रीमहारुद्राय सांगाय सपरिवाराय उत्तरवक्त्राय सदाशिवाय नमः केसरंकुंकुमचंदनंसमर्पयामि पीताक्षतान्स० तुलसीशतपत्रपुष्पंस० पंचसौगंधिधूपं वाअगरुधूपंस० घृतदीपंस० गोधूमान्ननैवेद्यंस० कर्पूरनिरांजनं० पुंगीफलतांबुलंस० दक्षिणास० अथकलापूजनं—ॐ रजसे नमः १ ॐ रक्षायै० २ ॐ रत्यै० ३ ॐ पाल्यायै० ४ ॐ कामायै. ५ ॐ संजीविन्यै० १० ॐ प्रियायै० ७ ॐ बुध्यै० ८ ॐ क्रियायै० ९ ॐ धात्र्यै० १० ॐ भ्रामर्यै० ११ ॐ मोहिन्यै० १२ ॐ ज्वरायै० १३ ॐ नमोभगवते महारुद्राय कृष्णवर्णाय गरुडवाहनाय उत्तरवक्त्राय आपस्तत्वाय सर्वदोषविनाशाय त्रयोदशकलात्मनेनमः रजोरक्षारतिः पाल्याकामासंजीविनिप्रिया ॥ बुद्धिक्रिया च धात्री च भ्रामरीमोहिनीज्वरा ॥ वामदेवकलाह्येतात्रयोदशवरानने ॥ तुलसीशतपत्रैश्चपूजयेत्

---

१ करौतु संहतौ कृत्वा सन्मुखावुन्नतांगुली ॥
तलांतर्मीलितांगुष्ठौ कुर्यादेपाज्ञमुद्रिकेति ॥

नीलवर्णाय कूर्मवाहनाय दक्षिणवक्राय तेजस्तत्वाय सर्वबाधाविनाशाय अष्टकलात्मने नमः तमोमोहाक्षयातृष्णाव्याधिमृत्युक्षुधातृपा अघोरस्यकलाह्येताअष्टौ च परिकीर्त्तिताः ॥ नीलोत्पलैश्चकरवीरैः पूजयेत्कूर्मवाहनं ॥ सर्वबाधाविनिर्मुक्तं ज्ञानमोक्षप्रदायकं ॥ नीलाभ्रवर्णमाकारमघोरंघोरदंष्ट्रकं ॥ दंष्ट्राकरालमत्युग्रंवंदेहंदक्षिणामुखं श्रीमद्रुद्राय सांगाय सपरिवाराय दक्षिणवक्राय नमः इति प्रणमेत् अथ पूर्ववक्त्र पूजनं तत्पुरुषायेतितत्पुरुषऋषिः गायत्रीछंदः सूर्योदेवता पूर्ववक्त्रपूजनेविनियोगः ॐ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ अथ ध्यानं—संवर्त्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धितेजोरुणंगंभीरध्वनिनिसृतंसुदशनंप्रोद्भासिताम्राधरं अर्धेदुद्युतिलोलपिंगलजटाभार प्रबद्धोरगं वंदे सिद्धसुरासुरेन्द्र नमितं पूर्वमुखं शूलिनः अश्ववाहनाय पीतवर्णाय पूर्ववक्राय वायुस्तत्वाय चैतन्यात्मनेआदित्याय नमः हैँ कवचमुद्राप्रदर्शनं पूर्ववक्त्रंपूजयेत् श्रीमहारुद्राय सांगाय सपरिवाराय पूर्ववक्त्रसदाशिवाय नमः आरक्तचंदनंस० आरक्ताक्षतान्स० दूर्वांकुरअर्कपुष्पंस० कृष्णागरुधू-

---

१ करद्वंद्वा गुल्मयोश्चमणिस्पुरिति तल्लक्षणं ।
सर्वाङ्गुल्यअनामेः पाण्योः कवचबन्धनम् इति
अनामेः स्कंधात् ॥

पंस॰ घृतदीपंस॰ मोदकनैवेद्यंस॰ पूगीफलतांबूलंस॰ दक्षि-
णांस॰ अथकलापूजनं—ॐ निवृत्यै नमः १ ॐ प्रति-
ष्ठायै॰ २ ॐ विद्यायै॰ ३ ॐ शांत्यै॰ ४ ॐ भगवते
महारुद्राय आरक्तवर्णाय अश्ववाहनाय पूर्ववक्त्राय वायुस्त-
त्वाय चतस्रकलात्मने नमः ॐ निवृत्तिश्चप्रतिष्ठाचविद्याशांति-
स्तथैवच ॥ तत्पुरुषस्यकलाह्येताश्चतस्रश्चनसंशयः ॥ दुर्वा-
कुरैरर्कपुष्पैः पूजयेदश्ववाहनं ॥ आयुष्यंवर्द्धतेतेनचतुर्वर्गफल-
प्रदं ॥ बालार्कवर्णमारक्तंपुरुषंचतडित्प्रभं ॥ दिव्यंपिंगजटा-
धारंवंदेहंपूर्वदिङ्मुखं श्रीमहारुद्राय सांगाय सपरिवाराय पूर्व-
वक्त्राय नमः इति प्रणमेत् अथोर्ध्ववक्त्रपूजनं ईशानःसर्ववि-
द्यानामितिईशानऋषिः अनुष्टुप्छंदः रुद्रोदेवता ऊर्ध्ववक्त्र-
पूजनेविनियोगः ॐ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानां-
ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ अथ-
ध्यानं—व्यक्ताव्यक्तगुणोत्तरं च वरदं षट्त्रिंशतत्वाधिकं
तस्मादुत्तरतत्वमक्षरमिति ध्येयंसदायोगिनः वंदेतामसवर्जितं-
नमनसासूक्ष्मातिसूक्ष्मंपरं शांतंपंचममीश्वरस्यवदनंखंव्यापिते-
जोमयं ॐ भगवते महारुद्राय जंबूवर्णाय वृषभवाहनाय
आकाशतत्वाय अव्यक्तात्मने महारुद्राय नमः हौं व्यापक-

१ उत्तानौताहृशावेवव्यापकांजलिकंकरौताहृशौसंयुतावे-
मनचानौकरौव्यापकांजलिकंनामगुद्रेतितल्लक्षणं ॥

मुद्राप्रदर्शनं ऊर्ध्ववक्त्रं पूजयेत् श्रीमहारुद्राय सांगाय सपरि॰ वाराय ऊर्ध्ववक्त्राय नमः यक्षकर्दमचंदनं समर्पयामि ॥ यक्षकर्दमस्तु कस्तूरिकायाद्वौभागौद्वौभागौ, कुंकुमस्यच ॥ चंदनस्यत्रयोभागाःशशिनस्त्वेकएवहीति ॐ भगवतेमहारु॰ द्रायजंबूवर्णाय ऊर्ध्ववक्त्राय नमः श्वेताक्षतान्स॰मि विल्वपत्रं॰ कनकपुष्पंस॰ दशांगधूपंस॰ घृतदीपंस॰ शर्करादध्योदन॰ नैवेद्यंस॰ फलंतांबूलंस॰ दक्षिणांस॰ ॥ अथकलापूजनं——ॐ शशिन्यै नमः १ ॐ गदिन्यैनमः २ ॐ हृष्टायै॰ ३ ॐ मरीच्यै॰ ४ ॐ ज्ञानायै नमः ५ ॐ भगवतेमहारुद्राय जंबूवर्णाय वृषभवाहनायऊर्ध्ववक्त्राय आकाशतत्वाय पंचक॰ लात्मने नमः शशिनीगदिनीहृष्टामरीचिर्ज्ञानिनीतथा ॥ ईशा॰ नस्यकला पंचनिरंजनपदानुगाः ॥ बिल्वैकनकपुष्पश्चपूज॰ येद्वृषवाहनं ॥ पूजनीयंप्रयत्नेनज्ञानसौख्यप्रदायकं ॥ ईशा॰ नंसूक्ष्ममव्यक्तं तेजःपुंजपरायणं अमृतस्वाविचिद्रूपंत्रदेहंपंचमं॰ मुखं ॥ श्रीमद्रुद्राय सांगाय सपरिवाराय ऊर्ध्ववक्त्राय नमः इतिप्रणमेतइत्यन्यमतं इति पंचवक्त्रपूजा

---

## पंचवक्त्र पूजानी सामग्रीनी याद.

### महारुद्र तथा रुद्रकल्पद्रुम पद्धति प्रमाणे छे.

| पश्चिमवक्त्र. | उत्तरवक्त्र. | दक्षिणवक्त्र. | पूर्ववक्त्र. | ऊर्द्ध्ववक्त्र. |
|---|---|---|---|---|
| वाहन हंस. | गरूड. | कुर्म वाहनाय. | अश्व. | वृषभ वा. |
| वर्ण शुभ्र. | कृष्ण. | नील. | पीतं. रक्तं. | जंबु वर्ण. गोक्षिरं. |
| तत्व पृथ्वी. | आपस्तत्व. | तेजस्तत्वाय. | वायु. | आकाश. |
| चंदन श्वेतं. मनशिला. | केसरं कुंकुम. हरिचंदन. | कस्तुरी चंदन. कृष्णागरु. | आरक्त चं. हरिताल. | यक्षकर्दमं चं. भस्मं चं. |
| अक्षत श्वेत. | पीताक्षतान. | नीलाक्षतान. | आरक्त अ. | श्वेत अ. |
| पुष्प श्वेत. | कृष्ण तुलसीशतपत्र. | नीलोत्पलानि. करवीर पु० | दूर्वांकुरेन् अर्क पु० | बिल्व प. कनक पु. |
| धूप कर्पूरं धूपं. गुग्गुल. | पंचसौगंधिकं धूपं. वा अगरु धूपं. | गुग्गुलं धूपं सितागरु. | कृष्णागरु धू. | दशांगं धू. हरिचंदनं धू |
| दीप घृत. | घृत. | घृत. | घृत. | घृत दीप. |
| नैवेद्य पायस. | गोधूमान्न नै. | माषान्न नैवेद्य. | मोदक. | शर्करा-दध्योदनं नै. |
| ॐ ह्रौं घनु-र्बाण मु. | ॐ ह्रीं पद्म मु. | ॐ ह्रूँ ज्ञान मु. | ह्रैं कवच मु. | ह्रौं व्यापक मु. |

---

१ एने माटे पृ. १२ मां दर्शावेलुं चंदन लेवुं.

२ महारुद्र पद्धतिमां दर्शावेल प्रमाणे.

३ रुद्र कल्पद्रुमा दर्शावेल प्रमाणे.

ज्यां चिन्ह करेलुं नथी त्यां बन्ने पद्धतिना मत प्रमाणे छे.

अथ बिल्वाष्टकस्तोत्रं श्रीः त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रियायुधं त्रिजन्मपापसंहारमेकबिल्वंशिवार्पणं १ त्रिशाखैर्बिल्वपत्रैश्चअछिद्रैः कोमलैः शुभैः तवपूजांकरोमीशबिल्वमेकंशिवार्पणं २ गोदानंचसहस्रेभ्योद्विमुखीनांचनित्यशः विप्रेभ्योभोजनंदद्या देकबिल्वंशि० ३ अग्निष्टोमसहस्राणि वाजपेयशतानिच कन्याकोटिसहस्राणि बिल्वमेकंशि० ४ शालिग्रामसहस्राणिशतंकूपतडागयोः अश्वमेधसहस्रस्यबिल्वमेकंशि० ५ दर्शनंबिल्ववृक्षस्यस्पर्शनंपापनाशनं अघोरपापसंहारमेक बिल्वंशि० ६ ब्राह्मणेभ्योश्रोत्रियेभ्योमिष्टान्नंचददातियः तच्छ्रेयः कोटिगुणि तमेकबिल्वं० ७ अखंडबिल्वपत्रैश्चपूजनंतेनवैः शुभैः भक्त्याकरोतिदेवेशबिल्वमेकंशि० ८ बिल्वाष्टकमिदंस्तोत्रंयः पठेच्छिवसंनिधौ शिवलोकमवाप्नोतिशिवेनसहमोदते० ९ इति बिल्वाष्टकस्तोत्रंसंपूर्णम् बिल्वपत्रसमर्पणप्रकार सूक्तंशिवरहस्ये अछिद्रैश्चनवैः शुद्धैः संवृत्तैः पुरतोर्पितैः बिल्वपत्रैः शिवः पूज्यः शिवलोकमभीप्सता १ बिल्वपत्रेस्थितोब्रह्मामध्यपत्रस्यदक्षिणे मध्यपत्रेस्थितः साक्षाद्रुद्रः संसारमोचकः २ वामपत्रेस्थितोविष्णुरिंदिरासहितः सदा ॥ इंद्रादयोलोकपालाः वृंतात्रेपरिकीर्तिताः ३ पृष्ठेभागेस्थितायक्षाअभक्तानांनिषेधकाः पूर्वभागेमृतंन्यस्तंदेवैर्ब्रह्मादिभिः पुरा ४ अतोवैपूर्वभागेनपूजयेद्गिरिजापतिं इतिबिल्वपत्रसमर्पणविधिः अन्यदपि स्नात्वाजलेसमुद्धृत्यभस्मनांगानिसादरं अग्निरित्यादिभिर्मंत्रैः कृत्वाभस्माभिमंत्रणं त्रिपुंड्रधारणंकृत्वातथा रुद्राक्षधारणं बिल्वमूलेसंनिवेश्यजप्त्वामंत्रंषडक्षरं बिल्ववृक्षनमस्तेस्तुशिवपूजनसाधन मूलतोभवरूपायमध्यतोमृडरूपिणे अग्रतः शिवरूपायपत्रेवेदस्वरूपिणे स्कंधेवेदांतरूपायतरुराजायते नमः नमस्तेबिल्वतरवेमानुसोदरते नमः शिवपूजोद्यताभीष्टसाधनायनमोनमः इतिसंप्रार्थितंबिल्वंनत्वाकृत्वाप्रदक्षिणं कृतांजलिपुटोभूत्वाप्रार्थयेत्पुनरादरात् वेदरूपाणिपत्राणिशिवपूजायमघते प्रार्थयामीतिसंप्रार्थ्यमवेत्तद्धरणोशतः रुद्राध्यायंजपन्नेवस्मरन्नेवमहेश्वरं गृहीत्वाबिल्वपत्राणिपूजयेद्गिरिजापतिं सुबिल्वपत्रश्रेष्ठेनयोजयेल्लिंगमस्तकं उत्तानैः पूजयेत्पत्रैरुत्तरामैर्जलान्वितैः इतिशिवरहस्योक्तबिल्वपत्रपूजनम् ॥

# अथ रुद्राभिषेक प्रकारः

॥ ॐ यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकांतैः पंचभिरंगमंत्रैः पूर्वमभिषेकः ॐ भूः ओं भुवः ओंस्वः ओं नमस्तेरुद्रेत्यादिनातमेषांजंमेभ्यः ओंभूः ओंभुवः ओंस्वः ओंमित्यं तेनाष्टप्रणव युक्तेनरोद्राध्यायेनचाभिषेकः ओंवषट् सोमेत्यष्टभिः कंडिकाभिश्च काण्वानां तुसप्तकंडिकाभिरिति विशेषः ओंनतंविदाथेतिद्वाभ्यां चाभिषेकः इत्युक्तं देवपद्धतौ ओं उग्रश्चेति तिसृभिः सप्तभिर्वारुद्र जटानाम्नीभिश्चेति परशुरामादयः निर्मूलत्वान्नेति देवयाज्ञिकादयः ॥ ॐ वाजश्चमे इत्यष्टानुवाकास्मकेनचेतिदेव याज्ञिकाः महाछिरसाऽभिषेक पक्षेन चमकानुवाकैरभिषेकः ॥ चमकानुवाकैरभिषेक पक्षेतुनमहाछिरसाभिषेक इत्यपरे ॐ ऋचंवाचमितिशान्त्यध्यायेन शांतिकरणं ॥ ओंशांतिरिति त्रिरूच्चारणंवा ॥ इत्येकोरुद्राभिषेकप्रकारः ॥ अयमेवप्रकारश्चमक वर्जंसर्वैर्वाजसनेयिभिरादृतः ॥ अथापरप्रकारः ॥ ओं यज्जाग्रतइत्यादिभिर्नमस्तेरुद्रेति रौद्राध्यायांतैः षड्भिरंगमंत्रैः पूर्वमभिषेकः ओंभूः ओंभुवः ओंस्वः ओंनमस्तेरुद्रेत्यादिनातमेषांगंमेदध्मः ओं भूः ओं भुवः ओंस्वः ओंइत्यं तेनाष्टप्रणवयुक्ते नरोद्राध्यायेनाभिषिंचयः ॥ ओंवषट् सोमेत्यष्टभिः कंडिकाभिरभिषेकः ॥ ओं उग्रश्चेतितिसृभिः सप्तभिर्वा ॥ महाछिरो रुद्रजटाभ्यामभिषेका मायपक्षेतु ओं वाजश्चम इत्यष्टानुवाकेनाऽभिषेकः ॥ ओं ऋचंवाचमितिशान्त्यध्यायेनः पक्षद्वये पिशांतिकरणम् ॥ ओंशांतिरिति त्रिरूच्चारणंवा ॥ इति द्वितीय प्रकारः ॥ बृहत्पराशरस्मृतिमते तुपंचाङ्गमंत्र पर्वकोरौद्राध्यायस्यैवजपोंते च शांतिकरणमित्ययमेवरुद्र जपोनतुपुनरन्यस्य कस्यचिन्मंत्रजपइतिविशेषः ॥ एवमभिषिंच्यः ॥ पट्पाष्टिनीलसूक्तं च पुनः षोडषऋग्जपेत् ॥ एषतेद्देनमंस्तेद्देनतंविद्दयमेवच ॥ मीढुष्टमेति चत्वारिंशेतचशतरुद्रियं ॥

१ नीलसूक्तं वषट्सोमेत्यष्टौ.

# अथ श्रीशुक्लयजुर्वेदस्य रुद्राष्टाध्यायी सभाष्या

---

## अथ 'रुद्रे प्रथमोऽध्यायः'

अथ 'रुद्राः.' तत्रादौ—'रुद्रे प्रथमोऽध्यायः.'—हरिःॐ गणानान्त्वा । गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम । आहमजानि गर्ब्भधमात्त्वमजासि गर्ब्भधम् ॥ १ ॥

हे अश्व ! वयं त्वां हवामहे । आह्वयामः कीदृशं त्वाम् गणपतिं गणनां मध्ये गणपतिं गणरूपेण पालकम् प्रियाणां वल्लभानां मध्ये प्रियपतिं प्रियस्य पालकम् निधीनां सुखनिधीनां मध्ये निधिपतिं सुखनिधेः पालकं त्वां हवामहे । हे वसुरूप ! अश्व ! मम पतिस्त्वं भूया इति शेपः हे अश्व ! गर्भधम् गर्भं दधाति गर्भधम् गर्भधारकं रेतः अहम् आ अजानि आकृष्य क्षिपामि अज गतिक्षेपणयोः लोट् तं च गर्भधं रेतः आ अजासि आकृष्य क्षिपसि ॥ १ ॥

अयं मंत्रः संहितायामश्वमेध प्रस्तावे, पठितस्तत्राश्व स्तुतिरस्य मंत्रस्य वाच्योर्थः स च यजमान पत्नीनां परिक्रामन्तीनां कर्त्रीणां मतो वयमिति बहुवचनान्ते नास्मदो निर्देशः सद्भावेऽपि बह्वीनां पत्नीनां यस्य न स्यात्पुत्रोत्पादनस्तेनाप्यस्य कर्त्तव्यता ज्ञायते.

---

आ मंत्र यजुर्वेद संहितामां अश्वमेध प्रस्तावमां अश्वस्तुतिनो छे.

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ॥ २ ॥

हे अश्व ! गायत्री त्रिष्टुप् जगती अनुष्टुप् पंक्त्या सह बृहती उष्णिहा सह ककुप् एतानि छन्दांसि सूचीभिरेताभिः त्वां शम्यन्तु संस्कुर्वन्तु विकरणव्यत्ययः असिपथार्थं त्वग्भेदनं संस्कारः ॥

द्वाभ्यां अश्व संस्कारः लौहराजत सौवर्णाभिः सूचीभिः प्रकरणं पूर्ववत् ॥ २ ॥

---

बीजो मंत्र तथा त्रीजो मंत्र संहितानां अश्वमेध संबंधी अश्व संस्कारनो छे.

द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः । विछन्दा याश्च सछन्दाः सूचीभिः शम्यन्तु त्वा ॥ ३ ॥

द्वे पदे यासां ता द्विपदाः याः चतुष्पदाः याः त्रिपदाः याः षट्पदाः याः विछन्दाः विगतं छन्दो याभ्यस्ताः छन्दोलक्षणहीनाः याः सछन्दाः छन्दोलक्षणयुताः ताः सर्वाः छन्दोजातयः हे अश्व ! सूचीभिः त्वां शम्यन्तु ॥ ३ ॥

सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ॥ पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥ ४ ॥

दैव्याः सप्त ऋषयः देवस्य प्रजापतेः इमे दैव्याः प्रजापतिप्राणाभिमानिनः सप्त ऋषयः भरद्वाजकश्यपगौतमात्रिवसिष्ठविश्वामित्रजमदग्निसंज्ञाः । अन्वालेभिरे सृष्टवन्तः सृष्टियज्ञमिति शेषः । किं कृत्वा

पूर्वेषां पन्थां पन्थानमनुदृश्य अधस्तनकल्पोत्पन्नानामवसिताधिकाराणां मार्गं विलोक्य पूर्वकल्पोत्पन्नैर्ऋषिभिर्यथा सृष्टम् तथा सृष्टवन्त इत्यर्थः सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयादित्युक्तेः । कथमिव रथ्यो न रश्मीन् नकार उपमार्थः रथे साधुः रथ्यः रथीर्यथा इष्टदेशप्राप्त्यर्थं प्रथमं रश्मीन्प्रग्रहानालभते स्पृशति सृजति वा तथा तेऽपि सृष्टियशं सृष्टवन्तः किम्भूता ऋषयः सहस्तोमाः स्तोमसहिताः सहच्छन्दसः छन्दोभि र्गायत्र्यादिभिः सहिताः आवृतः अत्रापि सहशब्दाध्याहारः आवृत्-शब्देन कर्मोच्यते सहावृतः कर्मसहिताः श्रद्धासत्यप्रधानानां कर्मणा-मनुष्ठातारः सहप्रमाः प्रमाणं प्रमा तत्सहिताः शब्दप्रमाणपरीक्षणतत्पराः धीराः धीमन्तः ॥ ४ ॥

ऋषे ऋषयः सृष्टिकर्तार इत्यर्थ स्वप्रतिपादकोऽयं मंत्रः सारथी इवार्थः सादृश्यमिति यावत्

---

ऋषीओ सृष्टिकर्ता छे. ए आ मंत्रोमां छे.

यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसंङ्कल्पमस्तु ॥ ५ ॥

ऋषिर्वदति । तन्मेमनः शिवसंकल्पमस्तु शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशं भवतु मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः । तत्किम् यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः मनसैवानुद्रष्टव्यमेतद् प्रमेयं ध्रुवमिति श्रुतेः । तत् उ यदः स्थाने तच्छब्दः उकारश्चार्थः यच्च मनः सुप्तस्य पुंसः तथैव एति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्ता-वस्थायां पुनरागच्छति । यच्च दूरंगमं दूरं गच्छतीति दूरंगमम् खश्प्रत्ययः

अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते । आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रिय मर्थेनेति न्यायोक्तेर्मनः सम्बन्धमन्तरा तेषामप्रवृत्तेः तादृशं मे मनः शान्तसंकल्पमस्तु ॥ ५ ॥

---

अग्निष्टोमे प्रस्तुते प्रार्थन मंत्राः षट्.

येन॒ कर्म्मा॑ण्य॒पसो॑ मनी॒षिणो॑ य॒ज्ञे कृ॒ण्वन्ति॑ वि॒दथे॑षु॒ धीराः॑।
यद॑पू॒र्वं य॒क्षम॒न्तः प्र॒जाना॒न्तन्मे॒ मनः॑ शि॒वसं॑कल्प-
मस्तु ॥ ६ ॥

मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति कृकरणे स्वादिः मनःस्वास्थ्यं विना कर्माप्रवृत्तेः। केषु सत्सु विदथेषु ज्ञानेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु वेत्तेरौणादिकोऽथ प्रत्ययः प्रत्ययोदात्तत्वेन मध्योदात्तं पदम् प्रत्ययः परश्च आद्युदात्तश्चेति पाणिन्युक्तेः (पा. ३. १-१-३) यज्ञसम्बन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः । कीदृशा मनीषिणः अपसः अप इति कर्मनाम ( निघ. २—१ ) अपो विद्यते येषां ते अपस्विनः कर्मवन्तः अस्मायामेधास्रजो विनिरिति (पा. ५—२—१२१) विन्प्रत्ययः विन्मतोर्लुगिति लुगभावेऽपि छन्दसो विनो लुक् ( ५—३—६५ ) सदा कर्मनिष्ठा इत्यर्थः। तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मण्यण् ( पा. ३—२—१ ). यच्च मनः अपूर्वम् न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः यद्वा अपूर्वमनपरमबाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः यच्च यक्षं यष्टुं शक्तं यक्षम् यजतेरौणादिकः सन्प्रत्ययः ञ्नित्यादिर्नित्यमिति

भूतकालसम्बन्धि वस्तु । भुवनं भवतीति भुवनम् भवतेः क्युप्रत्ययः वर्तमान-कालसम्बन्धि भविष्यत् भविष्यतीति भविष्यत् लृटः सद्वेति ( पा. ३–३–१४ ) शतृ प्रत्ययः तौ सदित्युक्तेः ( पा. ३–२–१२७ ) त्रिकाल सम्बद्धवस्तुषु मनः प्रवर्ततइत्यर्थः श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन अमृतेन शाश्वतेन मुक्तिपर्यन्तम् श्रोत्रादीनि नश्यन्ति मन-स्त्वनश्वर मित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते तनोतेर्यकीति ( पा. ६–४–४४ ) आकारः । कीदृशो यज्ञः सप्तहोता सप्त होतारो देवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता अग्निष्टोमे सप्त होतारो भवन्ति तन्मे मनः इति व्याख्यातम् ॥ ८ ॥

यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः॥ यस्मिँश्चित्तꣳ सर्वमोतं प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ९ ॥

यस्मिन्मनसि ऋचः प्रतिष्ठिताः यस्मिन् साम सामानि प्रतिष्ठितानि यस्मि न्यजूंषि प्रतिष्ठितानि मनसःस्वास्थ्ये एव वेदत्रयीस्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् अन्नमयं हि सोम्य मन इति छान्दोग्ये मनस एव स्वास्थ्ये वेदो-च्चारणशक्तिः प्रतिपादिता। तत्र दृष्टान्तः रथनाभौ आराःइव यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छब्दजालं मनसि किंच प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयि ज्ञानं यस्मिन्मनसि ओतं प्रोतं निक्षिप्तम् तन्तु संततिः पटे इव सर्वं ज्ञानं मनसि निहितम् मनः स्वास्थ्ये एव ज्ञानोत्पत्ति र्मनोवैयाग्र्ये ज्ञानाभावः। तन्मे मम मनः शिवसंकल्पं शान्तव्यापारमस्तु॥९॥

व्यग्रता व्यग्रस्य भावोवैयाग्र्यं गुण वचनेत्यादि नाष्यम् ब्राह्मणा दित्वात्ष्यम् नप्वेरयैजागमः

सुपा॒र॒थिरश्वा॑न्नि॒व यन्म॑नु॒ष्या॒न्नेनी॒यते॑ऽभी॒शुभि॑र्वा॒जिन॑ऽइव ॥ हृ॒त्प्रति॑ष्ठं॒ यद॑जि॒रं जवि॑ष्ठं॒ तन्मे॒ मनः॑ शि॒वस॑ङ्कल्पमस्तु ॥ १० ॥ इति रुद्रे प्रथमोऽध्यायः ॥ १ ॥

यत् मनो मनुष्यान्नराजे नीयते अत्यर्थमितस्ततो नयति नयतेः क्रिया समभिहारे यङ् मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते मनुष्यग्रहणं प्राणिमात्रोपलक्षकम् तत्र दृष्टान्तः सुपारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान्ने नीयते द्वितीयो दृष्टान्तः अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजीनोऽश्वान्नेनीयतऽइत्यनुषङ्गः रश्मिभिर्नियच्छतीत्यर्थः । उपमाद्वयम् प्रथमायां नयनं द्वितीयायां नियमनम् तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः । यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते यच्च मनः अजिरं जरारहितम् बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात् । यच्च जविष्टम् अति जववद्वेगवत् जविष्ठम् न वै वातात्किं चनाशीयोऽस्ति न मनसः किं चनाशीयोऽस्तीति श्रुतेः तन्मऽइत्युक्तम् ॥ १० ॥ इति रुद्रे प्रथमोऽध्यायः

---

पुनः पुनः अतिशयेन वा नीयते ने नीयतेणीञोयङन्ता ल्लुट्

---

अथ 'रुद्रे द्वितीयोऽध्यायः'

हरिः ॐ ॥ स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात् ॥ स भूमि॑ꣳ स॒र्वत॑स्पृ॒त्वा त्य॑तिष्ठद्दशाङ्गु॒लम् ॥ १ ॥

॥ श्रीगणेशायनमः ॥ रमाकान्तं, गिरं, नत्वा, हेरम्बं, शिव मम्बि-काम्, एकत्रिंशेऽधुनाध्याये, वेददीपो, वितन्यते. ॥

ब्रह्मणे ब्राह्मणमित्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः पुरुषान्न परं किंचिदित्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्योऽस्ति कीदृशः सहस्रशीर्षा सहस्रशब्दो बहुत्ववाची संख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् नेत्रं सहस्र द्वयेन भाव्यम् ततः सहस्रमसंख्यानि शीर्षाणि शिरांसि यस्य सः शीर्षं श्छन्दसीति ( पा. ६–१–६० ) शिरः शब्दस्य शीर्षन्नादेशः शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तस्यैवेति सहस्रशीर्षत्वम् एवमग्रेऽपि । सहस्राक्षः सहस्रमक्षीणि यस्य सः अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षकम् सहस्रपात् सहस्रं पादा यस्य संख्यासुपूर्वस्येति ( पा. ५–४–१४० ) पादस्यान्त्यलोपः पादग्रहणं कर्मेन्द्रियोपलक्षणम् । सः पुरुषो भूमिंब्रह्माण्डलोकरूपां सर्वतः तिर्यक् उर्ध्वमधश्च स्पृत्वा व्याप्य स्पृणोतिर्व्याप्तिकर्मा यद्वा भूमिशब्दो भूतोपलक्षकः पञ्च भूतानि व्याप्य दशाङ्गुलपरिमितं देश मत्यतिष्ठत् अतिक्रम्यावस्थितः दशाङ्गुलमित्युपलक्षणम् ब्रह्माण्डा द्वहिरपि सर्वतोव्याप्यावस्थित इत्यर्थः यद्वानाभेः सकाशाद्दशाङ्गुलमतिक्रम्य हृदि स्थितः नाभित इति कुतोलभ्यते कतम आत्मेत्युपक्रम्य सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति श्रुतेः विज्ञानात्मनो हृदयस्थानं कर्मफलोपभोगाय अन्तर्यामिणो नियन्तृत्वेन तदुक्तम् ( मुण्ड ३–१–१ ) द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती इति स पुरुषोऽत्र देवता तथा च श्रुतिः ( १३–६–२–१ ) इमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां

शब्देनाभिधीयते । तमेवादित्यं विदित्वा ज्ञात्वा मृत्युमत्येति अतिक्रामति परं ब्रह्म गच्छति। अयनायाश्रयायान्यः पन्था मार्गः न विद्यते सूर्यमण्डलान्तःपुरुषमात्मरूपं ज्ञात्वैव मुक्तिः ॥ १८ ॥

प्रजापतिश्चरति गर्ब्भे ऽअन्तरजायमानो बहुधा विजायते । तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥

यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति यश्चाजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते। धीराः ब्रह्मविदस्तस्य प्रजापतेः योनिं स्थानं स्वरूपं [परि] पश्यन्ति अहं ब्रह्मास्मीति जानन्ति । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन्ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि। सर्वं तदात्मकमेवेत्यर्थः ॥ १९ ॥

यो देवेभ्यऽआतपति यो देवानाम्पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥

यः प्रजापतिरादित्यरूपी देवेभ्योऽर्थायातपति द्योतते यश्च देवानां पुरोहितः सर्वकार्येष्वग्रे नीतः यश्च देवेभ्यः सकाशात् पूर्वः जातः प्रथममुत्पन्नः तस्मै आदित्याय नमः । कीदृशाय रोचतेऽसौ रुचस्तस्मै दीप्यमानाय इगुपधेति ( पा. ३–१–१३५ ) कप्रत्ययः तथा ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः इञि टिलोपः ब्रह्मावयवभूताय वा ॥ २० ॥

रुचम्ब्राह्मञ्जनयन्तो देवाऽअग्ग्रे तदब्रुवन् । यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे ॥ २१ ॥

देवाः दीप्यमानाः प्राणाः रुचं शोमनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्तः अग्रे प्रथमं तत् वचोऽब्रुवन् ऊचुः ब्राह्मो जाताविति ( पा. ६—४—१७१ ) निपातः। तत्किमत आह यो ब्राह्मणः हे आदित्य त्वा त्वामेवमुक्तविधिना उत्पन्नं विद्यात् जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः ॥ २१ ॥

श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥ २२ ॥ इति रुद्रे द्वितीयोऽध्यायः

ऋषिरादित्यं स्तुत्वा प्रार्थयते। हे आदित्य श्रीः लक्ष्मीश्च ते तव पत्न्यौ जायास्थानीये स्वदेश्ये इत्यर्थः यया सर्वजनाश्रणीयो भवति सा श्रीः श्रीयतेऽनया श्रीः सम्पदित्यर्थः। यया लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्यमित्यर्थः अहोरात्रे तव पार्श्वे पार्श्वस्थानीये। नक्षत्राणि गगनगास्ताराः तव रूपम् तवैव तेजसा भासमानत्वात् तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलका इति ज्योतिःशास्त्रोक्तेः अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकासितमुखस्थानीये अश्नुवाते व्याप्नुतस्तौ अश्विनौ अश्विनौ द्यावापृथिव्यौ इमे हीद ँ सर्वमश्नुवातामिति श्रुतेः। य ईदृशस्तं त्वां याचे इष्णन् कर्मफलमिच्छन् सन् इषाण इच्छ इषु इच्छायाम् विकरणव्यत्ययः यद्वा इष आभीक्ष्ण्ये क्र्यादिः अभेच्छार्थः किमेषणीयम् तत्राहअमुं परलोकं मे मम इषाण मम परलोकः समीचीनोऽस्त्वितीच्छा अमोघेच्छत्वादिष्टं भवतीत्यर्थः। सर्वं मे मम इषाण सर्वलोकात्मकोऽहं

मेवेयमितीछेत्यर्थः मुक्तो मवेयमित्यर्थः सर्वं खल्विदं ब्रह्मेति सामश्रुतेः ॥

---

## अथ ' रुद्रे तृतीयोऽध्यायः '

हरिः—ॐ आशुःशिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनो निमिषऽएक वीरःशतꣳ सेनाऽअजयत्साकमिन्द्रः ॥ १ ॥

इन्द्रः शतं सेना शतसंख्याकाः शत्रुसेनाः साकं सहैव एकप्रयत्नेनैवाजयत् जयति । कीदृश इन्द्रः आशुः अश्नुते व्याप्नोति आशुः शीघ्रगामी उण्प्रत्ययः । शिशानः शो तनूकरणे बहुलं छन्दसीति ( पा. २ ४—१६ ) जुहोत्यादित्वाच्छानचि श्लुः द्वित्वम् श्यति वज्रं तीक्ष्णीकरोति शिशानः वृषभो न[1] वृषभ इव भीमः भयंकरः । घनाघनः शत्रूणामतिशयेन घातकः हन हन्तेति वक्ता वा वृष्टिकर्तृमेघरूपो वा । कर्पुकाब्दो घनाघन इत्यभिधानात् चर्षणीनाम् मनुष्याणां क्षोभणः क्षोभयतीति क्षोभणः क्षोभहेतुः चालकः । सङ्क्रन्दनः सम्यक् क्रन्दनम् परभयहेतुर्ध्वनिर्यस्य यद्वा समाव्हाता शत्रूणाम् । अनिमिषः नास्ति निमेषो यस्य सः देवत्वात् यद्वा कदाचिदपि निमेषं न करोति अत्यन्तसावधान इत्यर्थः । एकवीरः एकश्चासौ वीरश्च अन्यनिरपेक्षम् शत्रूनेक एव जेतुं समर्थः ॥ १ ॥

सङ्क्रन्दनेना निमिषेण । जिष्णुना युत्कारेण दुश्च्यवनेन

---

[1] न शब्द इवार्थे.

धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नरऽइषुहस्तेन वृष्णा ॥ २ ॥

युध्यन्ते ते युधः क्विप् पादादावामन्त्रितस्येति आद्युदात्तः हे युधो नरो योद्धारो मनुष्या इन्द्रेण कृत्वा यूयं तत्परबलं जयत वशीकुरुत वशीकृत्य च तत्सहध्वम् अभिभवत विनाशयतेत्यर्थः । कीदृशेनेन्द्रेण संक्रन्दनेन शब्दकारिणा अनिमिषेण एकचित्तेन । जिष्णुना जयनशीलेन । युत्कारेण युधं करोतीति युत्कारस्तेन कर्मण्यण् युद्धकारिणा । दुश्च्यवनेन दुःखेन च्यावयितुं शक्यो दुश्च्यवनस्तेन अजय्येन धृष्णुना प्रगल्भेन भीतिरहितेन इषुहस्तेन इषवो हस्ते यस्य तेन वारणायायुधोपेतेन । वृष्णा वर्षतीति वृषा तेन कामानां वर्षुकेण ॥ २ ॥

---

१. कामानां वर्षुकेण.

सऽइषुहस्तैः स निषङ्गिभिर्वशी सᳪस्रष्टा स युधऽइन्द्रो गणेन । सᳪसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥

॥ इन्द्रोऽस्मानवत्विति शेषः संस्रष्टा एवुभ्तृचाविति ( पा. ३–१–१३३ ) तृच् प्रत्ययः युद्धाय संसर्गकर्त्ता । वशी वशयति रिपूनिति वशी यद्वा कान्तः जनप्रियः स्वतन्त्रो वा निगृहीतारिषड्वर्गो वा ईश्वरो वा गणेन रिपुसमूहेनापि सह युधः युध्यतेऽसौ युधः युद्धकर्त्ता इगुपधज्ञेति ॥ ( पा. ३-१-१३५ )कप्रत्ययः। संसृष्टजित् संसृष्टान्युद्धाय सङ्गतान् रिपूञ्जयति संसृष्टजित् । सोमपाः सोमं पिबतीति यजमानानां यागेषु सोमपानकर्त्ता । बाहुशर्धी बाह्वोः शर्धो बलमस्यास्ति बाहुशर्धी बाहुबलोपेतः संयोगितनिरपेक्ष इत्यर्थः शर्ध

इति बलनाम ( निघ. २–९ ) उग्रधन्वा उग्रमुत्कृष्टं धनुर्यस्य सः धनुषश्चेत्यनङादेशः ( पा. ५–४–१३२ ) प्रतिहिताभिरस्ता स्वेन धनुषा प्रेरिताभिरिषुभिरस्ता क्षेप्ता असु क्षेपणे तृन् आद्युदात्तत्वात् अस्यतीत्ये वंशीलः रिपुनाशयितेत्यर्थः सशब्दावृत्तिः पादपूरणार्था ॥ ३ ॥

बृहस्पते परि । दीया रथेन रक्षोहा मित्राँ२ ॥ ऽअप बाधमानः । प्रभञ्जन्त्सेनाःप्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् । ४ ॥

बृहस्पतिरिन्द्रः वाग्वै बृहती तस्या एष पतिः व्याकरणकर्तृत्वादिन्द्रस्य वाक्पतित्वमिन्द्रस्य पुरोहितत्वेन वा बृहस्पतिरेव स्तुयते । हे बृहस्पते त्वं रथेन परिदीय सर्वतो गच्छ दीयतिर्गत्यर्थः गत्वा चास्माकं रथानामस्मदीयस्यन्दनानामविता रक्षक एधि भव । कीदृशस्त्वम् रक्षोहा रक्षांसि हन्तीति रक्षोहा क्विप् रक्षसां हन्ता । अमित्रान् शत्रूनपबाधमानः पीडयन् । सेनाः परकीयाः प्रभञ्जन् प्रकर्षेण भग्नाः कुर्वन् । युधा युद्धेन प्रमृणो जयन् मृणातिर्हिंसाकर्मा तस्य क्विपि द्वितीयाबहुवचनम् प्रमृणो हिंसकान् जयन् पराभवन् ॥ ४ ॥

बलविज्ञायस्स्थविरः प्रवीरः सहस्वान्वाजी सहमानऽउग्रः । अभिवीरोऽअभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् । ५ ॥

हे इन्द्र त्वं जैत्रं जयनशीलं रथमातिष्ठ आरोह । कीदृशस्त्वं बलविज्ञायः बलं परकीयं विशेषेण जानाति बलविज्ञायः कर्मण्यण् आतो युक् चिण्कृतोः ( पा. ७–३–३३ ) यद्वा बलेन कृत्वा विज्ञायते कारणे घञ् । स्थविरः पुरातनः सर्वानुशासकः । प्रवीरः प्रकृष्टो वीरः शूरः । सह-

स्वान् सहो बलमस्यास्तीति सहस्वान् वाजोऽस्यास्तीति वाजी अन्नवान् सहमानः शत्रूनभिभवन् उग्रः युद्धेषु क्रूरः। अभिवीरः अभितो वीराःशूराः यस्य सः। अभिसत्वा। अभितः सत्वानः परिचारिकाः प्राणिनो यस्य सोऽभिसत्वा। सहसो बलाज्जातःसहोजाः न ह्यन्यस्माज्जातईदृग्बलःस्यात् गां स्तुतिगिरं वेत्ति गोवित्॥ ५॥

गोत्रभिदंङ्गोविदं वज्रबाहुञ्जयन्तमज्म प्रमृणन्तमोजसा। इमꣳ स जाताऽअनु वीरयद्ध्वमिन्द्रꣳ सखायोऽ अनुसꣳ रभद्ध्वम्। ६॥

हे सजाताः समानं जातं जन्म येषां ते समानजन्मानः सखायो देवा इममिन्द्रमनु वीरयध्वम् शूर वीर विक्रान्तौ अदन्तश्चुरादिः लोट् वीरकर्म कुर्वाणमनु गम्य वीरकर्मणा प्रोत्साहयत। अनु संरभध्वम् संरम्भं वेगं कुर्वाणमनु संरम्भं कुरुत कीदृशमिन्द्रम् गोत्रभिदं गोत्रमसुरकुलं भिनत्ति गोत्रभित्तम् यद्वा गा अपःत्रायते गोत्रो मेघः तस्य भेत्तारम् गोविंदम् गां वाचं वेत्तीति गोवित् तम् पण्डितम्। वज्रबाहुं वज्रं बाहौ यस्य तम् अज्म संग्रामं जयन्तम् अज्मेति युद्धनाम् ( नि घ. २—१७ ) अजतेर्गत्यर्थस्य ओजसा बलेन प्रमृणन्तं शत्रून्हिंसन्तम् मृणातिर्हिंसाकर्मा ॥ ६ ॥

अभिगोत्राणि सहसागाहमानोदयो वीरꣳशतमन्युरिन्द्रः। दुश्च्यवनꣳपृतनाषाडयुद्ध्योस्माकꣳ सेनाऽअवतुप्रयुत्सु। ७॥

इन्द्रः युत्सु युद्धेषु अस्माकं सेनाः प्रावतु प्रकर्षेण रक्षतु छंदसि

परेऽप्रीति (पा. १-४-८१-) उपसर्गस्य क्रियापदात्परप्रयोगः। कीदृश इन्द्रः गोत्राणि असुरकुलानि मेघवृन्दानि वा अभिगाहमानः सर्वतो विलोडयन्। अदयः दयारहितः। वीरःविक्रान्त। शतमन्युः शतसंख्यो मन्युः क्रोधो यस्य शतयज्ञो वा। दुश्च्यवनः अप्रच्याव्यः पृतनां संग्रामम् सहते अभिभवतीति पृतनाषाट्। अयुध्यः योद्धुमशक्यः नास्ति युध्यः प्रतियोधास्येति वा ॥ ७ ॥

इन्द्रऽ आसान्नेता बृहस्पतिर्दक्षिणा यज्ञःपुरऽएतु सोमः॑। देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्ग्रम् ॥८॥

इन्द्रः बृहस्पतिश्च आसां देवसेनानां नेता प्रणेता भवत्विति शेषः यज्ञः यज्ञपुरुषोः। विष्णुर्दक्षिणा दक्षिणत एतु गच्छतु। दक्षिणादाच्प्रत्ययः। सोमः पुरोऽग्रे एतु। मरुतो गणदेवा अग्रं सेनाग्रभागं यन्तु गच्छन्तु। कीदृशीनां देवसेनानाम् अभिभञ्जन्तिनाम् भञ्जो आमर्दने शत्रून्मर्दयन्तीनाम्। तथा जयन्तीनाम् विजयमानानाम् ॥ ८ ॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञऽ आदित्यानाम्मरुताᳪं शर्द्धऽउग्ग्रम्। महामनसाम्भुवनच्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् ॥ ९ ॥

वृष्णाः कामवर्षितुरिन्द्रस्य। राज्ञो वरुणस्यादित्यानां द्वादशानां मरुतां चैषां देवानामुग्रमुत्कृष्टं। शर्धो बलं। गजतुरगरथपत्त्यात्मकसैन्यं घोषो जितं जितमिति शब्दश्च उदस्थात् उत्थितः। जितं जितमिति वददिन्द्रादिसैन्यमुत्थितमित्यर्थः। कीदृशानां देवानां महामनसां महन्मनो येषां ते महामनसस्तेषाम् युद्धे स्थिरचित्तानाम् तथा भुवनच्यवानाम् भुवनं

लोके च्यावयन्ति ते भुवनच्यवास्तेषां भुवनच्यावनसमर्थानाम् । जयतां विजयमानानाम् ॥ ९ ॥

उद्धर्षय । मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाᳩसि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तु घोषाः ॥ १० ॥

हे मघवन्धनवन्निन्द्र । आयुधानि उद्धर्षय उद्धतहर्षाणि कुरु मामकानां मदीयानां सत्वनां प्राणिनां मनांसि च उद्धर्षय हर्षयुक्तानि कुरु । हे वृत्रहन् वैरिघातिन् । वाजिनामश्वानाम् वाजिनानि शीघ्रगमनानि उद्धर्षय उत्कृष्टानि कुरु । किं च जयतां विजयमानानां रथानां घोषाः शब्दा उद्यन्तु उद्गच्छन्तु रथाः सशब्दाः प्रसरन्तु ॥ १० ॥

अस्माकमिन्द्रः । समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं वीराऽउत्तरे भवन्त्वस्माँ२ ॥ ऽउदेवाऽअवताहवेषु ॥ ११ ॥

ध्वजेषु समृतेषु ऋ गतौ सङ्गतेषु शत्रुध्वजैः संयुक्तेषु सत्सु इन्द्रः अस्माकं रक्षिता भवत्विति शेषः तदानीमस्माकं या इषवोऽस्मदीयैः प्रयुक्तास्ता जयन्तु परसैन्यानि घ्नन्तु । अस्माकं ये वीराः शूरास्ते उत्तरे परकीयभटेभ्य उत्कृष्टा भवन्तु उ अपि च हे देवा हवेषु अस्मान्यूयमवत रक्षत अन्येषामपि दृश्यतऽइति ( पा. ६–३–१३७ ) दीर्घः ॥ ११ ॥

अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥

अप्वा देवता सा व्याधिर्भयं वा यस्मादेतया विद्धोऽपचीयते तस्मादप्वा अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् अन्येष्वपि दृश्यतऽइति । ( पा १ २–१०१ ) डप्रत्ययः अपशब्दान्त्याकारलोपश्छन्दसः ततष्टाप् अपवाति अपगमयति सुखं प्राणांश्चेत्यप्वा ऐन्द्रोऽभिरूपा द्वादश भवन्तीति ( ९–२–३–६ ) श्रुतेरियमपीन्द्रसेनासम्बन्धिनी । हे अप्वे अमीषां शत्रूणां चित्तं चित्तानि प्रतिलोभयन्ती मोहयन्ती अङ्गानि शत्रुगात्राणि गृह्णाना ततः परेहि अङ्गान्यादाय परागच्छ पुनरन्यानिपून्ग्रहीतुमभि शत्रुसंघं प्रेहि प्रगच्छ । तेषां हृत्सु हृदयानि शोकैर्धनपुत्रनाशादिनिमित्तैर्निर्दह विभक्तिव्यत्ययः । किञ्च अमित्राः शत्रवोऽन्धेन तमसा गाढान्धकारेण सचन्तां सङ्गच्छन्तां षच् सम्बन्धे लोट् ॥ ॥ द्वादशैन्द्र्यः समाप्तः ॥१२॥

अर्वसृष्टापरा । पत शरव्ये ब्रह्मसꣳशिते । गच्छामित्रान्प्रपद्यस्व मामीषाकञ्चनोच्छिषः ॥ १३ ॥

हिंसिका शरमयी हेतिः शरव्या ब्रह्मणा मन्त्रेण संशिता तीक्ष्णीकृता ब्रह्मसंशिता तादृशि हे शरव्ये त्वमवसृष्टास्माभिर्मुक्ता सती परापत सहसा परसैन्ये पतिता भव । पतित्वा चामित्रान् शत्रून् गच्छ प्राप्नुहि प्राप्य च प्रपद्यस्व शत्रुशरीरेषु प्रविश प्रविश्य चामीषां शत्रूणां मध्ये कं चन पुरुषं मा उच्छिषः अवशिष्टं मा कुरु सर्वानपि जहीत्यर्थः शिषुऌ विशेषणे पुषादीत्यादिना ( पा. ३–१–५५ ) च्लेरङ् ॥ १३ ॥

प्रेता जयता नरऽइन्द्रो वुःशर्म्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १४ ॥

योध्यन्स्तौति । हे नरोऽस्मदीया योद्धारो यूयं प्रेत परसैन्यं प्रति प्रकर्षेण गच्छत ततो जयत विजयं प्राप्नुत द्व्यचोऽतस्तिङ इति ( पा.

६–३–१३९ ) प्रेतेत्यत्र दीर्घः अन्येषामपि दृश्यतऽइति ( पा. ६–३–१३७ ) जयतेत्यत्र दीर्घः। इन्द्रो वो युष्मभ्यम् शर्म जयोर्त्यं सुखम् यच्छतु ददातु दाण दाने पाघ्रेत्यादिना ( पा. ७–३–७८ ) यच्छादेशः । किंच यथा यूयमनाधृष्या असथ केनाप्यतिरस्कार्या भवथ। तथा वो युष्माकं बाहवो भुजदण्डा उग्रा उद्गूर्णायुधाः सन्तु । असथेत्यत्र लेटोऽडाटा-विति ( पा. ३–४–९४ ) अडागमः ॥ १४ ॥

असौ या । सेना मरुतऽपरेषामभ्यैतिनऽओजसा स्पर्द्धमाना । तांगूहत तमसापव्रतेन यथा मीऽअन्योऽअन्यन्न जानन् । १५ ॥

हे मरुतो या प्रसिद्धा असौ परेषां शत्रूणां सेना नोऽस्मानभि आ एति अभ्यागच्छति । कीदृशी ओजसा बलेन स्पर्धमाना स्पर्धां कुर्वाणातां सेनां तमसा अन्धकारेण यूयं गूहत संवृताङ्कुरुत । तथा गूहत । यथा अमी सैनिका अन्योऽन्यं न जानन् परस्परं न जानीयुस्तथा गूहत। कीदृशेन तमसा अपव्रतेन अपगतं व्रतं कर्म यस्मात्तेन येन व्याप्तानाङ्कर्म नश्यति तादृशेन तमसा गूहतेत्यर्थः ॥ १५ ॥

यत्र बाणाः सम्पतन्ति कुमारा विशिखाऽइव । तन्नऽइन्द्रो बृहस्पतिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु । १६ ॥

यत्र यस्मिन्युद्धे बाणाः शत्रुप्रयुक्ताः सम्पतन्ति इतश्चेतश्च सम्भूय पतन्ति तत्र दृष्टान्तः कुमारा विशिखा इव विगता शिखा येषां ते विशिखाः शिखारहिता मुण्डितमुण्डा विकीर्णकवचा बाअतिबालाश्चपलाः सन्तो यथा इतस्ततो गच्छन्ति तद्वत् तत् तत्र युद्धे इन्द्रः नोऽस्मभ्यं शर्म विजयोर्त्यं सुखं यच्छतु ददातु । कीदृश इन्द्रो बृहस्पतिः बृहतां मन्त्राणां पतिः

पालकः विजयोचितमन्त्रज्ञः अदितिः नास्ति दितिः खण्डनं यस्य अख-ण्डितशक्तिः विश्वाहा विश्वान्सर्वान् स मन्ताद्धन्तीति शत्रूना विश्वाहा स शर्म यच्छतु इति पुनरुक्तिरादरार्था । यद्वा तत्र इन्द्रः बृहस्पतिरिन्द्रगुरुः अदितिरिन्द्रमाता च विश्वाहा सर्वाण्यहानि सर्वदा शर्म यच्छतु विश्वानि च तान्यहानि च विश्वाहा विभक्तेराकारः अत्यन्तसंयोगे द्वितिया ॥ १६ ॥

मर्म्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु-वस्ताम् । उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवा-मदन्तु । १७ ॥

हे यजमान ते तव मर्माणि जीवस्थानानि वर्मणा कवचेनाहं छाद-यामि आवृणोमि । राजा विप्रादीनामधिपः सोमोऽमृतेन नास्ति मृतं मरणं येन तेन मरणनिवारकेणानेन वर्मणा त्वा त्वामनुवस्तामन्वाच्छा-दयतु । वस आच्छादनेऽदादिः लोट् । तथा वरुणः ते तव वर्म उरोः द्वयोरपि वरीयः उरुतरं प्रथीयः कृणोतु करोतु अत्यन्तमुरु वरीयः ईयसुनि प्रत्ययस्फेत्यादिना ( पा. ६-४-१५७ ) उरोर्वरादेशः किं च देवाः जयन्तम्जियं प्राप्नुवन्तं त्वा त्वामनुमदन्तु अनुकूला भूत्वा हृष्यन्तु उत्साहयन्तु वा ॥ १७ ॥

मर्माणि तरुति कवचं प्रयच्छति इति सङ्ग्रामे कवच दानवेलायामस्य मंत्रस्य पाठोविहितः इति रुद्रे तृतीयोऽध्यायः

---

## अथ ' रुद्रे चतुर्थोऽध्यायः '

हरिः—ॐ विभ्राड्बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतो योऽअभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति । १ ॥

विविधं भ्राजते विभ्राट् सूर्यः सौम्यं सोमरूपं हविः पिबतु कीदृशं सोम्यं बृहत् महत् मधु मधुरस्वादम् । यःसूर्यः त्मना आत्मना प्रजाः अभिरक्षति पालयति पुपोष पुष्णाति च पुरुधा बहुधा विराजति च शोभते कीदृशः-यज्ञपतौ यजमाने अविह्रुतमखण्डितमायुःदधत् स्थापयन् । वातजूतः वातेन प्रेरितः वातेन प्रेरितं रविमण्डलं भ्रमतीति-प्रसिद्धिः । त्मना मन्त्रेष्वाङ्यादेरात्मन ( पा. ६–४–१४१ ) इत्याकारलोपः ह्रु कौटिल्ये ह्रु ह्वरेश्छंदसीति ( पा. ७–२–३१ ) ह्रु. आदेशः ॥ १ ॥

उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । २ ॥

उ निपातः पादपूरणःत्यमिति त्यच्छब्दश्छान्दसः तच्छब्दार्थे । केतवो रश्मयः त्यं तं प्रसिद्धं सूर्यं देवमुद्वहन्ति देवो दानाद्द्योतनाद्वेति यास्कः [ निरु. ७–२०– ] किम्भूतम् सूर्यं जातवेदसम् जातं वेदो ज्ञानं धनं वा यस्मात्तम् किमर्थमुद्वहन्ति विश्वाय दृशे षष्ठ्यर्थे चतुर्थी विश्वस्य दर्शनाय जगद्द्रष्टुमित्यर्थः । दृशेविख्ये चेति ( पा. ३–४–११ ) तुमर्थे निपातः । तस्मै स्वाहा सुहुतमस्तु ॥ २ ॥

येनोपावकचक्षसा भुरण्यन्तञ्जनाँ२ ॥ ऽअनु । त्त्वं वरुण पश्यसि । ३ ॥

हे पावक शोधक येन चक्षसा दर्शनेन त्वं भुरण्यन्तमनुपश्यसि क्षिप्रपाती पक्षी भुरण्युः भुरण्युमात्मानं करोति भुरण्यति भुरण्यतीति भुरण्यन् तम् क्रियन्तात् शतृप्रत्ययः । सर्वमेधयाजिनं भुरण्युपक्षिरूपमात्मानं कृत्वा स्वर्गच्छन्तम् येन चक्षसानुपश्यसीत्यर्थः । तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण त्वं पश्य वरुणः सूर्यः ॥ ३ ॥

दैव्याँ वद्ध्व्यूऽ आगतᳯ रथेन सूर्य्यत्वचा । मद्ध्वा यज्ञᳯ समञ्जाथे । तम्प्रत्नथायं वेनश्चित्रन्देवानाम् ॥ ४ ॥

देवानामिमौ दैव्यौ हे दैव्यौ अध्वर्यू अश्विनौ युवां रथेन आगतमागच्छतम् शपो लुक् । कीदृशेन रथेन सूर्यत्वचा सूर्यस्येव त्वक् कान्तिर्यस्य तेन । एत्य मध्वा मधुरेण हविषा सोमपुरोडाशदध्यादिना यज्ञं समञ्जाथे युवां संप्रक्षयतम् बहूनि हवींषि कुरुतमित्यर्थः । तंप्रत्नथा ( ७–१२ ) अयं वेनः ( ७–१६ ) चित्रन्देवानाम् ( ७–४२ ) तिस्रः प्रतीकोक्ताः आद्ये द्वे शुक्रमन्थिपुरोरुचौ । (१) तृतीयाग्रयणस्य ॥ ४ ॥

तंप्रत्नथा । अयंवेनः । चित्रंदेवानाम् इतिचतुर्थऋचः

तम्प्रत्नथा । पूर्वथा विश्वथे मथा ज्येष्ठतातिम्बर्हिषदᳯ स्वर्विदम् । प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्तमनुयासु वर्द्धसे । ५ ॥

हे इन्द्र त्वं यासु यज्ञक्रियासु अनु वर्धसे पुनःपुनः सोमपानेन वृद्धिं प्राप्नोषि तासु । वृजनमिति मलनाम ( निघ० २–९ ) बलं

बलवद्यज्ञफलं दोहसे क्षारयसि दुदासीत्यर्थः यजमानायेति शेषः कथं दोहसे तत्र दृष्टान्तमाह प्रत्नथा प्रत्नपूर्वेत्यादिना ( पा. ५-३ १११ ) थाल्प्रत्ययः उपमार्थीयःप्रत्नशब्दः पुराणवचनः ( निघ० ३-२७ चिरन्तनानां भृग्वादीनामीव फलं दोहसे । पूर्वथा पूर्वेषामिव ऋषीणां साध्यादिनामिव विश्वथा विश्वेषां सर्वेषामृषिपुत्राणामिव । इमथा इदानीन्तनानाम् यजमानानामिवास्य फलन्दोहसे तन्त्वा स्तुम इति शेषः । किम्भूतम तम् ज्येष्ठतातिम् तननम् तातिः विस्तारः ज्येष्ठा उत्कृष्टा तातिर्विस्तारो यस्य तम् यद्वा वृकज्येष्ठाभ्यामित्यादिना ( पा. ५-४-४१ ) प्रशंसायाम् तातिल्प्रत्ययः प्रशस्तो ज्येष्टो ज्येष्ठेपु शस्यो वा ज्येष्ठतातिः । तथा बर्हिषदम् यज्ञेपुबर्हिपि सीदतीति बर्हिपदस्तम् स्वर्विदम् स्वः द्युलोकम् वेत्ति जानातीति स्वर्वित्तम् तत्र हि तस्य निवासः प्रतीचीनमात्मनोऽभिमुखम् धुनिं धुञ कम्पने कम्पितारम् शत्रूणाम् आशुम् शीघ्रम् जयन्तम् नेतव्यानि वस्तूनि यद्वास्या ऋचोऽर्थान्तरम् हे इन्द्र यस्त्वं प्रतीचीनम् प्रतिगमनमस्मत्प्रतिकूलम् वृजनम् वर्जनीयमालस्या श्रद्धादिकम् दोहसे रिक्तीकरोषि विनाशयसि दुह प्रपूरणे प्रपूरणम् रिक्तिकरणमितिक्षीरस्वामी किं च यासु क्रियासु धुनिं स्वदनुग्रहाच्छत्रून्कम्पयन्तमाशुं क्षिप्रकारिणम् जयन्तम् सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानमेनम् यजमानमनु सोमपानेन स्तुत्या च यः त्वं वर्धसे तासु क्रियासु तं त्वाम् । स्तुमः इति शेषः । कथमिव प्रत्नथा थाप्रत्यय उपमार्थः प्रत्नाः पुरातना भृग्वादयो यथा त्वामस्तुवन् पूर्वथा पूर्वे पित्रादय इव विश्वथा अतीताः सर्वे यजमाना इव इमथा इदानींतना वर्तमाना यजमाना इव वयं त्वां स्तुम इत्यर्थः

---

शुक्रम् उत्तरवेदिश्रोणो प्रतिप्रस्था मन्थिनम् सादयति ॥ वेदिश्रोणिदेवतम् हे उत्तरवेदिश्रोणे त्वमना घृष्टा नुपाहिंसितासि ॥ ५ ॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपार्ठ संङ्गमे सूर्य्यस्य शिशुन्नविप्रा मतिभीरिहन्ति ॥ ६ ॥

अनयाधिदैवमधियज्ञं चावस्थितः सोमः स्तूयते ॥ अधिदैवं चन्द्रात्मना स्तूयते। वेनोवेनतेः कान्तिकर्मण इति यास्कः (॥ निरु. १०–१८) विनि कान्तावित्यस्य, रूपम् अयम् वेनः कान्तश्चन्द्रो रजसो विमाने उदकम् रज उच्यते उदकस्य निर्माणकाले ग्रीष्मान्ते प्राप्ते पृश्निगर्भा अपः चोदयत् चोदयति प्रेरयति वर्षतीत्यर्थः। पृश्निरादित्यो द्युलोको वा गर्भोऽवस्थानं यासां ताः द्युलोकस्था रविस्था वा अपो वर्षति। किम्भूतो वेनः ज्योतिर्जरायुः ज्योतिर्विद्युल्लक्षणम् जरायुवद्वेष्टनं यस्य स ज्योतिर्जरायुः। इदानीमधियज्ञं लतात्मना सोमः स्तूयते विप्रा मेधाविनो ब्राह्मणाइमं सोमं शिशुं न शिशुमिव बालमिव मतिभिः मतिपूर्वाभिर्वाग्भिः रिहन्ति स्तुवन्ति बालं यथा कश्चिल्लालयति तद्वत् सोमं स्तोत्रशास्त्ररूपाभिर्वाग्भिः स्तुवन्ति रिहति रर्चनकर्मसु पठितः ( निघ० ३–१४ ) अर्चनं स्तवनमेव। किम्भूतमिमम् सूर्यस्यापां च सङ्गमे गृहितामिरद्भिरभिपुतमिति शेषः सोमाभिषवार्थं वसतीवर्य्य आपो अपां सूर्यस्य च संगमे गृह्यन्ते ता वै वहन्तीना ॆं स्यन्दमानानां गृह्णीयाद्दिवा गृह्णीयादिति श्रुतेः। यद्वायमर्थः अपां सूर्यस्य सङ्गमे निमित्ते उदकसूर्यसमागमनिमित्तं वृष्टिगर्भनिष्पत्त्यर्थं विप्रा इमं सोमं स्तुवन्ति यथा बालं कस्यचिद्धस्तुनो लाभाय यथा कश्चित्स्तौति। ईदृश हे सोम त्वमुपयामेन ग्रहपात्रेण गृहीतोऽसि मर्कः शुक्रपुत्रोऽसुरपुरोहितस्तस्मै त्वां गृह्णामीति शेषः ॥ ६ ॥

चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।

आप्रा द्यावा पृथिवीऽ अन्तरिक्षꣳ सूर्य्यऽआत्मा जगतस्त्
स्थुषश्च । ७ ॥

परापररूपेण स्थितः सूर्योऽत्र स्तूयते। सूर्यः चित्रमाश्चर्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छति वा। लडर्थे लुङ् उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतिंष्यादत्तऽइत्याश्चर्यम् किम्भूतः सूर्यः देवानाम् दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषामनीकम् मुखमाश्रय इत्यर्थः यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः। तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत्प्रकाश इत्यर्थः मित्रादय उपलक्षकाः सर्वस्य सदेव मनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभिव्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन्द्यावापृथिवी दिवं भूमिं चान्तरिक्षं चाप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः। एवमपररूपेण स्तुत्वा पररूपेण स्तौति। किम्भूतः सूर्यः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मान्तर्यामी यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्मेति श्रुतेः सूर्योऽद्वैतमनेनोच्यते इति भावः तस्मै स्वाहा सुहुतमस्तु ॥ ७ ॥

आनऽइडाभिर्विदथे सुशस्ति विश्वानरः सविता देवऽ एतु। अपि यथा युवानो मत्सथानो विश्वञ्जगदभिपित्वे मनीषा। ८ ॥

विश्वानरो विश्वनरहितकारी सविता देवः नोऽस्माकं विदथे यज्ञगृहे आ एतु आगच्छतु। कथम् इडाभिः सुशस्ति यथा स्यात्तथा इडा भक्षणेन शोभना शस्तिः शंसनं प्रशंसा यस्यां क्रियायां तथा यथा सर्वे इडां भक्षयन्ति तथा एत्वित्यर्थः यद्वा सुशस्ति विभक्तिलोपः कीदृशो

यज्ञगृहे सुशस्ति सुशस्तौ इडाभिः शोभनप्रशंसायुक्ते । एवं सूर्यमुक्त्वा देवानाह हे युवानः जरारहिता देवा अपि निश्चितम् आभिपित्वे अभिपतने आगमनकाले यथा येन प्रकारेण यूयं मत्सथ मद तृप्तौ तृप्तय तथा नोऽस्माकं विश्वं सर्वं जगत् गन्तृ जङ्गमम् पुत्रगवादिकम् मनीषा मनीषया बुद्ध्या मत्सथ अन्तर्भूतण्यर्थः तर्पयत यथा भवद्भिस्तृप्तिः क्रियते तथाऽस्मदभ्यास्तर्पणीया इत्यर्थः ॥ ८ ॥

यद॒द्य । कच्च॑ वृत्रहन्नु॒दगा॑ऽअ॒भि सू॑र्य्य । सर्वं॒ तदि॑न्द्र ते॒ वशे॑ । ९ ॥

॥ वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिराविति कोशात् वृत्रमन्धकारम् शार्वरं हन्ति वृत्रहा रविः । हे वृत्रहन् हे सूर्य हे इन्द्र ऐश्वर्ययुक्त अद्य यत् कच्च यत्र कुत्रचित् त्वमभि उदगाः अभ्युदेषि तत्सर्वं ते तव वशेऽस्तीति शेषः यद्वा उदगाः अत्र पुरुषव्यत्ययः । यत्किंचित्प्राणिजातमुदेति तत्सर्वं तव वशे सर्वस्येशिता त्वमेवेत्यर्थः ॥ ९ ॥

त॒रणि॑र्वि॒श्वद॑र्शतो ज्योति॒ष्कृद॑सि सूर्य्य । विश्व॒मा भा॑सि रोच॒नम् । १० ॥

हे सूर्य त्वं ज्योतिष्कृत् तेजसः कर्तासि विश्वमाभासि प्रकाशयसि च अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीयं तेज इत्यर्थः । कीदृशं विश्वं रोचनं दीप्यमानं स्वप्रकाशेनेति भावः कीदृशस्त्वम् तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः अर्त्यविसृभ्योऽनिरिति [ उणा. २-९८ ] तरतेरनिप्रत्ययः । विश्वदर्शतः विश्वस्य, दर्शतो, दर्शनीयः दृशेरतच् ॥ १० ॥

तत्सूर्य्य॑स्य । दे॒व॒त्वन्त॑न्म॑हि॒त्वम्म॒ध्या कर्त्तो॒र्वित॑तं॒ सञ्ज॑भार ।

यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥११॥

सूर्यस्य तत् देवत्वं देवतानु भावः तच्च महित्वं महाभाग्यमैश्वर्यम् तत्किम् कर्त्तोः ईश्वरे तोसुन्कसुनाविति ( पा. ३–४–१३ ) इति करोतेस्तोसुन्प्रत्ययः कार्यश्रेष्ठस्य जगद्रूपस्य मध्या मध्ये विततं विस्तारितमंशुजालं संजभार संजहार संहरते न ह्यन्य । एतादृशमंशुजालं प्रसारयितुं संहर्तुं वा शक्नोतीत्यर्थः किं च यदा इत् यदेव हरितः हरितवर्णान्रश्मीनयुक्तयुंक्ते आत्मनि आरोपयति सधस्थात् सह तिष्ठन्त्यंशवो यत्र तत्सधस्थं व्योममण्डलम् सध मादस्थयोश्छन्दसीति ( पा. ६–३–९६ ) सहस्य सधादेशः सन्ध्याकाले पीतवर्णानंशून्यदा व्योममण्डलात्स्वरश्मिन्योजयति। आत् अनन्तरमेव रात्री निशा सिमस्मै वासः तनुते सर्वं वस्तु तमसाच्छादयतीत्यर्थः सूर्यास्तादनन्तरं रात्रिसद्भावात् सिमशब्दः सर्वपर्यायः ॥ ११ ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ।
। १२ ॥

सूर्यो द्योः द्युलोकस्योपस्थे उत्सङ्गे मित्रस्य वरुणस्य च तद्रूपं कृणुते कुरुते । येन रूपेण जनानभिचक्षे अभिचष्टे पश्यति । मित्ररूपेण सुकृतिनोऽनुगृह्णाति । वरुणरूपेण दुष्कृतिनो निगृह्णातीत्यर्थः । अस्य सूर्यस्य अन्यत् एकं पाजो रूपमनन्तम् कालतो देशतश्चापरिछेद्यम् रुशत् शक्लं दीप्यमानं विज्ञानघनानन्दं ब्रह्मैव। अन्यत् कृष्णं द्वैतलक्षणं रूपं हरितः दिशः इन्द्रियवृत्तयो वा सम्भरन्ति धारयन्ति इन्द्रियग्राह्यं द्वैतरू-

यमेकम् एकं शुद्धं चैतन्यमद्वैतमिति द्वे रूपे सूर्यस्य सगुणनिर्गुणं ब्रह्म सूर्य एवेत्यर्थः ॥ षाम इति बलनाम ( निघ०२–२ ) इह । रूपमुच्यते रोचतऽइति रुशत् औणादिकेऽति प्रत्यये चकारस्य शकारो गुणाभावश्च निपात्यते यद्वा रुश हिंसायाम् रुच्यर्थे वर्तमानादस्मछटः शतरि रुशदिति रूपम् ॥ १२ ॥

बण्महाँ२ ॥ ऽअसि सूर्य्य बडादित्य महाँ२ ॥ ऽअसि । महस्ते सतो महिमा पनस्य तेद्धादेव महाँ२ ऽअसि । १३ ॥

बडित्यव्ययम् सत्यार्थम् हे सूर्य सुवति प्रेरयति कार्येषु जगदिति सूर्यः राजसूयसूर्यरयादिना ( पा. ३–१–११४ ) क्यबन्तो निपातः बट् सत्यं त्वं महान् असि श्रेष्ठोऽसि आदत्तेऽशूनित्यादित्यः हे आदित्य बट् त्वं महानसि। किंच महः महतः सतः नित्यस्य ते तव महिमा पनस्यते लोकैः स्तूयते हे देव दीप्यमान अद्धा सत्यं त्वं महानसि अभ्यासे, भूमासमर्थं मन्यन्तऽइति ( निरु. १०–१२ ) पुनरुक्तिरादरार्था ॥ १३ ॥

बट्सूर्य्यश्रवसा महाँ२ ॥ ऽअसि सत्रा देव महाँ२ ॥ ऽअसि । मह्नादेवानामसुर्य्यः पुरोहितो विभुज्ज्योतिरदाभ्यम् । १४ ॥

हे सूर्य बट् सत्यं श्रवसा धनेन यशसा वा त्वं महानसि हे देव सत्यं त्वं महानसि देवानाम् मध्ये श्रेष्ठोऽसि केन मह्ना महत्वेन कीदृशः त्वम् असुर्यः असवः प्राणा येषां सन्ति तेऽसुराः तेभ्यो हितोऽसुर्यः प्राणिहितः पुरोहितः पुरोऽग्रे हितः स्थापितः सर्वकार्येषु पुरः पूज्यः सर्वदेवानां सूर्यनिदानानन्तरमेव पूजाधिकारात् विभु व्यापकमदाभ्यमनुपहिंस्यं ज्योतिः तेजस्त्वमेव तेजोरूप इत्यर्थः ॥ १४ ॥

अ॒श्राय॑न्त॒ऽइव॒ सूर्य॒ꣳ विश्वे॒दिन्द्र॑स्य भक्षत । वसू॑नि जा॒ते जन॑मान॒ऽओज॑सा॒ प्रति॑भा॒गन्न दी॑धिम ॥ १५ ॥

आदित्यस्य पुनर्ग्रहणम् । श्रयन्त इति आयन्तः श्रीञ् सेवायाम् अतः शतरि शपि गुणे प्राप्ते व्यत्ययेन वृद्धिः । इव एवार्थे । सूर्यं श्रयन्तः आश्रयन्तः एव अर्थाद्रश्मयः इन्द्रस्य विश्वा इत् विश्वानि सर्वाण्येव वसूनि धनानि वृष्टिधान्यनिष्पत्त्यादीनि भक्षत अभक्षत भजन्ते विभजन्ते प्राणिभ्यो विभज्य ददतीत्यर्थः । भज भागसेवयोः अस्य लुङि. तङि. प्रथमबहुवचने रूपम् । अड्भावश्छार्षः । आत्मनेपदेष्वनत इति ( पा. ७–१–५ ) झस्यादादेशः सूर्यकिरणा इन्द्रदत्तां वृष्टिं भूमौ विभजन्तीत्यर्थः । किं च वयं तान्येव वसूनि जाते पुत्रे जनमाने उत्पद्यमाने च ओजसा तेजसा सह प्रतिदीधिम धारयाम स्थापयामित्यर्थः । किमिव भागं न भागमिव यथा स्वभागं पुत्रादिषु धारयामस्तथेत्यर्थः । धि धृतो लट् व्यत्ययेन शपः श्लुः द्वित्वम् तुजादित्वादभ्यासदीर्घः ॥१५ ॥

अ॒द्या दे॑वा॒ऽउदि॑ता॒ सूर्य॑स्य॒ निरꣳह॑सः पिपृ॒ता निर॑व॒द्यात् । तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वीऽउ॒त द्यौः ॥ १६ ॥

दीव्यन्ति दीप्यन्ते इति देवाः रश्मयः हे देवाः नोऽस्मानंहसः पापात् निःपिपृत निर्मुञ्चत । अवद्यात् दुर्यशसोऽपि निःपिपृत । पृथक् कुरुत अस्माकं पापानि दुर्यशांसि च नाशयतेत्यर्थः क्व अद्यास्मिन्दिने सूर्यस्य उदिता उदिते उदये अद्य सूर्योदयेऽस्मान् शुद्धान्कुरुतेत्यर्थः । अद्येत्यत्र द्व्यचोऽतस्तिङः निपातस्य चेति ( पा० ६–३–१३५–१३६ ) दीर्घः अन्येषामपि दृश्यत इति ( पा. ६–३–१३७ ) दीर्घः पिपृतेत्यत्र किं च

